॥ राधायाः परिहारस्तोत्रम् (ब्रह्मवैवर्तपुराणान्तर्गतम्) ॥

त्वं देवी जगतां माता विष्णुमाया सनातनी ।
कृष्णप्राणाधिदेवि च कृष्णप्राणाधिका शुभा ॥ १॥

कृष्णप्रेममयी  शक्तिः कृष्णसौभाग्यरूपिणी ।
कृष्णभक्तिप्रदे राधे नमस्ते मङ्गलप्रदे ॥ २॥

अद्य मे सफलं जन्म जीवनं सार्थकं मम ।
पूजितासि मया सा च या श्रीकृष्णेन् पूजिता ॥ ३॥

कृष्णवक्षसि या राधा सर्वसौभाग्यसंयुता ।
रासे रासेश्वरीरूपा वृन्दा वृन्दावने वने ॥ ४॥

कृष्णप्रिया च गोलोके तुलसी कानने तुया ।
चम्पावती कृष्णसंगे क्रीडा चम्पककानने ॥ ५॥

चन्द्राक्ली चन्द्रवने शतश्रिङ्गे सतीति च ।
विरजादर्पहन्त्रि च विरजातटकानने ॥ ६॥

पद्मावती पद्मवने कृष्णा कृष्णसरोवरे ।
भद्रा कुञ्जकुटीरे च काम्या च काम्यके वने ॥ ७॥

वैकुण्ठे च महालक्ष्मीर्वाणी नारायणोरसि ।
क्षीरोदे सिन्धुकन्या च मर्त्ये लक्ष्मीर्हरिप्रिया ॥ ८॥

सर्वस्वर्गे स्वर्गलक्ष्मीर्देवदुःखविनाशिनी ।
सनातनी विष्णुमाया दुर्गा शंकरवक्षसि ॥ ९॥

सावित्री वे! दमाता च कलया ब्रह्मवक्षसि ।
कलया धर्मपत्नी त्वं नरनारायणप्रसूः ॥ १०॥

कलया तुलसी त्वं च गङ्गा भुवनपावनी ।
लोमकूपोद्भवा गोप्यः कलांशा हरिप्रिया ॥ ११ ॥

कलाकलांशरूपा च शतरूपा शचि दितिः।
अदितिर्देव्माता च त्वत्कलांशा हरिप्रिया ॥ १२॥

देव्यश्च मुनिपत्न्यश्च्ज त्वत्कलाकलया शुभे ।

कृष्णभक्तिं कृष्णदास्यं देहि मे कृष्णपूजिते॥ १३॥

एवं कृत्वा परीहारं स्तुत्वा च कवचं पठेत् ।
पुरा कृतं स्तोत्रमेतद् भक्तिदास्यप्रदं शुभम् ॥ १४॥

॥ इति श्री ब्रह्मवैवर्ते श्रीराधायाः
परिहारस्तोत्रं सम्पूर्णम् ॥